इति संप्रेषितो वाहः शीघ्रमागत्य तत्स्थलम्।
तपस्यन्तीं च तां दृष्ट्वा प्रोवाचेन्द्रोदितं वचः ।। ३

ऐरावतोदितं वाक्यं इन्द्रदूतेन भाषितम्।
उवाच तपसा युक्ता नाहं यास्ये गजोत्तम ।। ४

यदा प्रसन्नो भगवान्ब्रह्मशापाद्विमुक्तये।
इन्द्रश्च स्वयमागत्य यदा मां नेष्यते दिवम् ।। ५

तदाऽहं दिवमारोक्ष्ये त्वं गच्छ दिवमुत्तमम्।
इत्युक्त्वा शिवपूजार्थं पुष्पाण्याहृत्य पश्यतः ।। ६

सन्निधिं प्राप्य विधिना स्नाता तीर्थजलेषु च।
चकार पूजां देवस्य प्रीतये परमेशितुः ।। ७

गजोऽपि भग्नसंकल्पस्तां नेतुं पुनरक्षमः ।
चकार तत्रोद्योगं च बलात्कारेण वै द्विज ।। ८

रम्भासमीपमागत्य देवसन्निधिमाश्रिताम्।
आवेष्ट्य च स्वतुण्डेन सोद्धर्तुं च प्रचक्रमे ।। ९

दृष्ट्वा गजस्य वेगं च अन्यां गतिमपश्यती।
बाहुभ्यां शिवमालिङ्ग्य दृढमेव तदा स्थिता ।। १०

आलिङ्गितः शिवोऽप्यत्र भक्तरक्षणदीक्षितः ।
क्षणे क्षणे वर्धमानो वल्लीव वनभोगतः ।। ११

गजोऽपि भग्नो वेगाच्च विमोक्तुं च न चाभवत्।
रम्भा तल्लिङ्ग संस्पर्शात् कोटिसिंहबलाऽभवत्।। १२

पुनर्गजोऽपि भगवद्देवेन्द्रभयशङ्कितः ।
लिङ्गेन च सहोद्धर्तुं प्रवृत्तिं च तदाऽकरोत् ।। १३

दन्तैः पादैश्च पतितः खात्वा लिङ्गस्य सर्वतः।
समूलोन्मूलनं कर्तुं नाशकत्पुनरेव सः।। १४

मुखात्सुस्राव रुधिरं भग्नगात्रो गजोत्तमः।
पपात सहसा भूमौ त्यक्तप्राण इवातुरः।। १५

मूर्च्छामवाप महतीं शिवभक्तविरोधतः।
एतद्वृत्तान्तमखिलं देवराजं न्यवेदयत्।। १६

शीघ्रं याहि च तत्स्थानं मा विलम्बस्व नारदः।
विमोचयित्वा रम्भां च वरदेन शिवेन च।। १७

ऐरावतेन सहितो दिवमाव्रज वृत्रहन्।
एतदेव तवोपायं नान्यदस्ति सुरेश्वर।। १८

नोचेद्गजोऽपि नायाति रम्भा च सुरनायिका।
नारदेनैवमुक्तस्तु देवेन्द्रो देवतैः सह।। १९

विमानवरमारुह्य पारिजाताटवीमगात्।
मूर्च्छां गतं गजं दृष्ट्वा तुष्टाव परमेश्वरम्।। २०

## पारिजातवनेशस्तुतिः

इन्द्रः—
नमो नमः कारणकारणाय ते पिनाकपाणे भगवन्नमस्ते।
नमोऽस्तु देवेश सुपारिजात वनाधिनाथाय गिरीन्द्रशायिने।। २१

अनन्तमूर्ते गजचर्मधारिन् त्रिणेत्रधारिन् शिवया समेत।
प्रपञ्चविस्तारविशेषशून्य त्रयीमयेशान नमो नमस्ते।। २२

सर्वप्रधानाय सतां मताय मृत्युञ्जयाय त्रिपुरान्तकाय।
नमो जटाभारविभूषिताय गङ्गाधरायाखिललोकसाक्षिणे।। २३

सुसूक्ष्मरूपाय दिगम्बराय श्रीपार्वतीशाय नमो नमस्ते।
नमो नमः शङ्कर शूलपाणे नमो नमस्ते त्रिपुरान्तकाय।। २४
नमो नमो विष्णुसुपूजिताय ब्रह्मेश्वरायाखिललोकवन्द्य।
कल्याणरूपाय भवाय तुभ्यं सोमाय शर्वाय महेश्वराय।। २५
कैलासनाथाय सदाशिवाय सर्वज्ञमूर्ते सकलागमाय।
रुद्राय भीमाय नमो नमस्ते नित्याय ते दीर्घजटाधराय।
कृपालवे भक्तपरायणाय नमः समस्तार्तिहराय तुभ्यम्।। २६
ऐरावतकृतद्रोहं क्षमस्व परमेश्वर।
मुनिशापहृतां रम्भां तव पादावलम्बिनीम्।। २७
विमोच्य स्वर्गतिं दत्वा रक्ष मां दीनवत्सल।
इति स्तुतो महादेवः पारिजातवनेश्वरः।। २८
प्रसन्नतामगात्तस्य रम्भयाऽऽलिङ्गितो भयात्।
वरदाभयहस्तं च चन्द्रलेखावतंसकम्।। २९
उमासमेतं विघ्नेशषण्मुखाभ्यां च संयुतम्।
स्वगणैर्भूतरूपैश्च नानाकारविकारिभिः।। ३०
प्रसन्नवदनं शान्तं दिग्वाससमनामयम्।
प्रणनाम सुरेशानः स्वगणैरभिवन्दितः।। ३१
देवोऽपि वरदस्तस्मै वृणीष्वेति वरं ददौ।
प्रसन्नमात्रे देवेशे दिग्गजोऽपि समुत्थितः।। ३२
मूर्च्छां विहाय कृपया शिवस्य परमेशितुः।
विभ्रष्टाभरणाङ्गश्च घण्टामणिविवर्जितः।
ननाम जगदीशानं स्तुवन्वाचामगोचरम्।। ३३
दैन्यं दृष्ट्वा दिग्गजस्य प्रणामं ब्रह्मेशानस्तत्र चामीचकार।
क्षान्तं क्षान्तं यत्त्वया घातमत्र तद्व्रतं मे वर्ततामत्र कल्पे।। ३४

रम्भा च मुक्ता मुनिवर्यशापात् मत्पूजया स्थानवरस्य वासात्।
यद्दन्तघातं पुरतः प्रदृश्यते तेनैव नाम्ना पुरमेतदस्तु ॥ ३५

ऐरावतपुरं नाम प्रसिद्धिमुपयास्यति ॥ ३६

त्वत्कर्णलग्नानि विभूषणानि वेगेन भूमौ पतितानि यत्र।

घण्टामणिश्चापि निपातितोऽभूत् तत्रैव लिङ्गं परिपूजयस्व ॥ ३७

प्रबलोऽसि गजानां त्वं चतुर्दन्त महाबल।
पूजया तव तुष्टश्च वरं दास्यामि कांक्षितम् ॥ ३८

इत्युक्तो देवदेवेन शम्भुना च गजोत्तमः।
गजानां कोटिबलवानभूद्देवप्रसादतः ॥ ३९

देवोक्तेनैव मार्गेण लिङ्गं संस्थापयत्स्वयम्।
घण्टामूर्तीश्वरं नाम प्रसिद्धं भुवनत्रये ॥ ४०

रम्भापि देवदेवस्य दक्षिणे बाणपातने।
युग्मसंख्याप्रमाणे च प्रतिष्ठाप्य महेश्वरम् ॥ ४१

पुष्यरागेण मणिना निर्मितं लोकपावनम्।
पूजयित्वा यथायोगं पुष्पैः सुरभिसंयुतैः ॥ ४२

पारिजातादिकुसुमैः बिल्वैश्च वकुलैरपि।
शतपत्रैश्च कल्हारैः करवीरैश्च चम्पकैः ॥ ४३

धूपदीपादिनैवेद्यैः रम्भेश्वरमतोषयत्।
अकरोत्सन्निधानं च रम्भेशश्च तदा स्त्रियाः ॥ ४४

इष्टान्वरांस्तदा दत्वा स्वर्गवासं च शाश्वतम्।
तल्लिङ्गदर्शनं ये च कुर्वन्ति मनुजा भुवि ॥ ४५

रम्भासंयोगसौख्यं च सत्यं सत्यं च विन्दति।
विमानवरमारूढाश्चरन्ति सकलां महीम्॥ ४६

विमानस्थाश्च ये देवाः तान्नमस्यन्ति सर्वदा।
शिवरूपधराश्चैव वसन्ति रजताचले॥ ४७

ऐरावतश्च देवेन्द्रो रम्भा चैव शिवाज्ञया।
अनुज्ञाताः शिवेनैव ययुर्दिवमतन्द्रिताः॥ ४८

प्राप्य स्वर्गपुरं प्रीत्या ववर्षुः पुष्पसञ्चयान्।
देवलोक समुद्भूतान्युत्तमानि विशेषतः॥ ४९

पतितानि प्रसूनानि पुरे चैरावताभिधे।
ततः पुष्पपुरं नाम प्रसिद्धं भुवनत्रये॥ ५०

देवः पुष्पपुरेशान इति लोके प्रथामगात्।
ऐरावतपुराख्यानं ये पठन्ति नरा भुवि॥ ५१

तेषामिन्द्रपुरप्राप्तिर्भविष्यति सुखेन वै।
क्षणं क्षणार्धमपि वा ये वसन्ति पुरोत्तमे॥ ५२

रजताद्रौ वसन्त्येव शिवसारूप्यधारिणः।

पञ्चनामस्मरणम्

पारिजातवनेशान श्रीमद्ब्रह्मपुराधिप॥ ५३

श्रीमदिन्द्रपुरीवास श्रीमत्पुष्पपुरेश्वर।
ऐरावतपुराधीश पञ्च नामानि यः पठेत्॥ ५४

स कैलासमवाप्नोति सत्यं सत्यं वदाम्यहम्।
रक्षोभूतपिशाचाश्च शाकिनी डाकिनी ग्रहाः॥ ५५

कूश्माण्डभूतवेताला ये चान्ये पुरुषादकाः ।
नश्यन्ति दर्शनादेव श्रीमत्पुष्पपुरस्य च ।। ५६

इन्द्रसेनो यथा पूर्वं मुक्तोऽभूद्ब्रह्मरक्षसः ।
तद्वत्सर्वेऽपि मुच्यन्ते स्थानस्यास्य च दर्शनात् ।। ५७

जगद्धितं लोकहितावहं च भवघ्नमत्यन्त सुखप्रदं च ।
ऐरावताख्यानपुरस्य वैभवं शृण्वन्ति ये कीर्तितमादरेण ।। ५८

इति पञ्चमोऽध्यायः

—*—

## अथ षष्ठोऽध्यायः

शौनकः—
इन्द्रसेनः कथं राजा पीडितो ब्रह्मरक्षसा ।
कथमत्र विमुक्तोऽभूत् सूत पौराणिकोत्तम ।। १

वदस्व वदतां श्रेष्ठ लोकानां हितकाम्यया ।
त्वद्विधा लोकरक्षार्थं चरन्ति पृथिवीतले ।। २

परोपकारनिरताः प्राणैरपि धनैरपि ।
अनन्यलोभा लोकैकभक्तरक्षण दीक्षिताः ।। ३

कथाव्याजेन लोकानां पापान्यपनुदन्ति च ।
व्यासप्रसादसंपन्ना व्यासवद्विगतस्पृहाः ।। ४

नैमिशारण्यनिलयाः सर्वे च मुनिपुंगवाः ।
त्वत्पादसेवासंसक्ताः पुत्रपौत्रसमन्विताः ।। ५

अनुमान्य च मां ब्रह्मन् कथयस्व कथाः शुभाः ।
यदीयमहिमा लोके पुनाति श्रवणाज्जनान् ।। ६

तस्माद्भवन्तं पृच्छामि पुण्यायाघक्षयाय च।
सूतः—
त्वमेव शौनक ब्रह्मन् सर्वं वेत्सि विशेषतः ॥ ७

अहो भाग्यमहो भाग्यं यत्प्रश्नो भवता कृतः।
महात्मनां पादसेवा लब्धा यस्मात्कथाश्रयात् ॥ ८

अहमेव जगत्पूज्यो यत्पादाब्जानुसेवकः।
इन्द्रसेनस्य चरितं वक्ष्ये शृणु महामते ॥ ९

यावद् ज्ञातं गुरुप्रोक्तं बहुकालविनिर्गतम्।
इन्द्रसेन इति ख्यातः सूर्यवंशसमुद्भवः ॥ १०

कांपिल्यनगरावासी शशास पृथिवीं स्वयम्।
पुत्रपौत्रश्रिया युक्तो धनधान्यसमन्वितः ॥ ११

दाता यज्वा देवभक्तो गोब्राह्मण हिते रतः।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ १२

प्रियवादी च सर्वत्र बहुराजन्यसंवृतः।
एवं वृत्तानुसारी च इन्द्रसेनो नृपोत्तमः ॥ १३

राजधर्ममनुसृत्य कदाचिन्मृगयां गतः।
चतुरङ्गबलोपेतो व्याधसेनासमन्वितः ॥ १४

मृगारण्यं नाम वनं संप्राप्य बहुकन्दरम्।
शल्यकांश्च रुरून्व्याघ्रान् वराहान्शशकान्बहून् ॥ १५

एवं सञ्चरमाणस्य सविता मध्यमागतः।
चण्डातपेन सा सेना पीडिता वनमध्यमे ॥ १६

निमील्योन्मील्य तत्रैव वृक्षमूले सर्वतः।
अवरुह्य तुरङ्गाच्च राजा श्रमसमन्वितः ॥ १७

कस्मिंश्चिद्वृक्षमूले तु निषसाद यदृच्छया।
क्षुत्तृष्णाभ्यां परिवृतः सूर्यांशुपरिपीडितः ॥ १८

तदा निद्रां स्मरन् राजा कालपाशवशेन च।
निद्रया परिभूतस्य स्वप्नः समभिजायत ॥ १९

क्रूरश्च देहनाशश्च पूर्वपापानुवर्तिकः।
तस्मिन्स्वप्ने महाघोरो ब्रह्मराक्षस आगतः ॥ २०

दण्डपाणिः क्रुधाविष्टः प्रहरन्नृपतिं तदा।
राजा विप्रहतस्तेन वाक्यमेतदुवाच ह ॥ २१

किमर्थं मां प्रहरसि अनाथं निरुपाधिनम्।
भवतः किञ्चिदेवात्र मया नापकृतं यतः ॥ २२

यदि प्रहरसि ब्रह्मन् त्वां निहन्मि न संशयः।
इत्युक्तः स्वप्नमध्ये च ब्रह्मराक्षस ऊचिवान् ॥ २३

राजन् शृणुष्व मद्वाक्यं नाहं स्वयमुपागतः।
पूर्वं त्वया कृतं पापं इतश्चाष्टमजन्मनि ॥ २४

तत्काले विभवात्क्षत्रकुलोत्पन्नः कुमारकः।
मागधस्य पुरे राजन् राजपुत्रः सखा तव ॥ २५

शयनासनभोज्येषु भोगभोग्येषु सर्वगः।
दानोपभोगकालेषु नैरन्तर्येण च स्थितः ॥ २६

कदाचित्तस्य जन्मनक्षत्रमभवत् स्थिरवासरे।
तद्दोषविनिवृत्त्यर्थं दानं कर्तुं महामनाः ॥ २७

पुरोहितेन सहितो ब्राह्मणान्बहुधाऽऽह्वयत्।
तदानीं च भवान् दृष्ट्वा दातारं नृपपुत्रकम् ॥ २८

दृष्ट्वा तदा दानविघ्नं त्वया कृतमनर्थकम्।
तद्वाक्येन तदा राजा त्वत्सखित्वबलेन च ।। २९

इष्टमित्येव मत्वा च दानं न कृतवांस्तदा।
दानेन किं फलमिति द्रव्यत्यागोऽत्र मा कुरु ।। ३०

स्वकार्य निरता विप्राः द्रव्यग्रहण बुद्धयः ।
एषां वाक्यं च न श्राव्यं कदाचिन्मगधेश्वर ।। ३१

मद्वाक्यमेव प्रामाण्यं कुरु नित्यमनिन्दितः ।
एवं त्वया कृतं पूर्वं भवता पापमुल्बणम् ।। ३२

तत्फलं भुक्ष्व राजेन्द्र मत्पीडां च सहस्व च ।
दानविघ्नकरा ये च ये ब्राह्मणविहिंसकाः ।। ३३

ब्रह्मद्रव्यापहर्तारः प्रयान्ति नरकान्बहून्।
अन्ते बहून् समासाद्य ब्रह्मरक्षोऽभिपीडिताः ।। ३४

भवन्ति बहुकालं च तेषां मुक्तिर्न विद्यते।
यावन्तो ब्राह्मणास्तत्र दानाभावेन दुःखिताः ।। ३५

तत्संख्यं जन्म संप्राप्य पीड्यमाना भवन्ति च।
पीडा तव समुत्पन्ना ब्रह्मरक्षःसमुद्भवा ।। ३६

एतावत्कालपर्यन्तं पूर्वपुण्यवशेन च।
स्थिरं राज्यं सुखेनैव इतः पीडा भविष्यति ।। ३७

चतुःषष्टिर्ब्राह्मणाश्च तदा विघ्नेन दुःखिताः ।
तावन्त्येव च जन्मानि भवता प्राप्यमस्ति वै ।। ३८

इतः प्रभृति राजेन्द्र मत्पीडाया वशो भव।
अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् ।। ३९

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
तस्मात्त्वद्भोक्तव्यमेवात्र भवता नात्र संशयः ॥ ४०

स इन्द्रसेन इत्युक्तः स्वप्ने च ब्रह्मरक्षसा ।
भयकंपितसर्वाङ्गो रोदमानः समुत्थितः ॥ ४१

उत्थिते च तदा राज्ञि वृक्षमूले च तत्स्थले ।
विस्मृतिः समभूत्तस्य पापकर्मवशेन च ॥ ४२

अमात्या राजभृत्याश्च दृष्ट्वा च स्मृतिवर्जितम् ।
अत्यन्तदुःखिता भूत्वा आरोप्य शिबिकान्तरे ॥ ४३

कथं कथञ्चिन्नगरं प्रापयन्शोकमोहिताः ।
तदैव राज्यरक्षार्थं तत्पुत्रं चन्द्रसेनिनम् ॥ ४४

अभिषिच्यासने स्थाप्य सेवमाना यथासुखम् ।
राज्यं च कारयामासुरमात्या भृत्यबान्धवाः ॥ ४५

राजाऽपि सर्वकालं च पीडितो ब्रह्मरक्षसा ।
निरुदको निराहारो निर्निद्रो निष्परिग्रहः ॥ ४६

चचार स्वपुरे राजा बालोन्मत्तपिशाचवत् ।
राजपत्न्यश्च पुत्राश्च राजानं भृशपीडितम् ॥ ४७

रोदमानाः सदाकालं अन्वीयुर्भ्रान्तचेतसः ।
एवं प्रवर्तमानस्य वर्षाणामेकविंशतिः ॥ ४८

ततश्च कालपाकेन महादुःखान्वितस्य च ।
तत्पुत्रश्चन्द्रसेनश्च सदा दानपरायणः ॥ ४९

पितुश्च मुक्तिमन्विच्छन् शशास वसुधां स्वयम् ।
कदाचिद्द्रष्टुकामश्च ब्राह्मणान्स समाह्वयत् ॥ ५०

पुरोहितेन सहितो गोधूमेन महात्मना।
आहूता ब्राह्मणास्तेन समायाताः पुरोत्तमम्।। ५१

आग्नीध्रो मालुधानश्च विशाखो यूपसंभवः।
जटाधरोऽग्निगर्भश्च सुशर्मा वेदपारगः।। ५२

संकृतिर्वामदेवश्च विरूपाक्षः कृताननः।
जयन्तो वेदगर्भश्च पिप्पलो रोमशो महान्।। ५३

एते चान्ये च बहवो राजानं समुपागमन्।
तान्दृष्ट्वा ब्राह्मणश्रेष्ठान् नमस्कृत्य नृपोत्तमः।। ५४

प्रसाद्याहार्घ्यपाद्यं च मधुपर्कं प्रसार्य च।
आसनानि प्रदत्वा च यथायोग्यं यथाविधि।। ५५

आवासाय गृहांश्चैव भोज्यानि विविधानि च।
यथासुखं निवेश्याथ वाजिमेधं व्यजिज्ञपत्।। ५६

तेऽपि विप्रा नृपतिना पूजिताः प्रीतमानसाः।
वसन्त आगते काले चक्रुस्ते यज्ञमुत्तमम्।। ५७

इत्युक्तो नृपतिर्विप्रैः स्वपितुर्वृत्तमब्रवीत्।
तन्मध्ये वेदमार्गश्च ब्राह्मणो वेदपारगः।। ५८

नानाशास्त्रविधानज्ञो नानागमपरायणः।
पापानामपि सर्वेषां प्रायश्चित्तानि कृत्स्नशः।। ५९

सम्यग्वेत्ता धर्मविधिं पुराणेषु विचक्षणः।
उवाच चेन्द्रसेनं च पितरं मोचयामि ते।। ६०

मा दुःखवशगो राजन्मा च शोके मनः कृथाः।
पुत्रस्त्वत्सदृशो यस्य तस्य पापं न विद्यते।। ६१

सत्पुत्रो यस्य वंशे च जनिष्यति नृपोत्तम।
यस्मिन्देशे च सत्तीर्थं महापापनिवारकम्॥ ६२

यस्मिन्वसति धर्मज्ञो राजा राज्ये नियामकः।
यस्मिन्नश्वत्थवृक्षश्च शमी यत्र च संस्थितः॥ ६३

अग्निहोत्रपरो विप्रो नदी सागरगामिनी।
पुराणपाठको यत्र लिङ्गं पौराणिकं तथा॥ ६४

यत्र कृष्णमृगा नित्यं चरन्ति विपिने शुभे।
तुलसीकाननं यत्र यत्र बिल्वतरुः शुभः॥ ६५

रुद्राक्षमालाभरणा भस्मोद्धूलितविग्रहाः।
पञ्चाक्षरीमन्त्रजपाः पञ्चयज्ञपरायणाः॥ ६६

तस्मिन्देशे पुण्यतमे पातकं नास्ति किञ्चन।
पितुस्तव च पापस्य दानविघ्नकृतस्य च॥ ६७

अनेकजन्मभोक्तव्यं महदस्ति च निष्कृतिः।
मुञ्च तापं मनोदुःखं श्रेयस्तेऽद्य भविष्यति॥ ६८

अहमेव च मोक्षाय यतिष्ये नास्ति संशयः।
यद्यहं च पिता पुत्रो यदि वैदिकसंमतः॥ ६९

ब्राह्मणे वेदशास्त्रेषु शिवे च परमात्मनि।
भस्मरुद्राक्षयोश्चापि तथा पञ्चाक्षरीषु च॥७०

अहेतुकी च मे बुद्धिः तेन मुक्तिर्भविष्यति।
सन्ति भूमौ विशेषाणि स्थानानि विविधानि च॥ ७१

तथा च जम्बूद्वीपे हि वर्षे भारतसंज्ञके।
तथा कवेरकन्यायास्तीरयोरुभयोरपि॥ ७२

स्वायंभुवविमानानि शैवानि च विशेषतः ।
तस्याः कवेरकन्याया दक्षिणेऽस्मिन्महत्तरम् ।। ७३

स्थानं च लोकविख्यातं कुम्भजादिनिवासितम् ।
कुम्भघोणं महापुण्यं भुक्तिमुक्तिप्रदं नृणाम् ।। ७४

तस्य पश्चिमदिग्भागे योजन द्वितये शुभे ।
पारिजातवनं पुण्यं पापिनामपि मुक्तिदम् ।। ७५

ब्रह्मादीनां तपःस्थानं इन्द्रादिसुरसेवितम् ।
तत्रानयित्वा स्थाने च पितरं मोचयामि ते ।। ७६

स्थानं प्रापय शीघ्रं च मया सह नृपोत्तम ।
आरोप्य शिबिकां दिव्यां वाहैरपि दृढैरपि ।। ७७

इत्युक्तश्चन्द्रसेनस्तु मुनिना वेदगर्भिणा ।
तथा चकार सर्वं च स्वपितुश्च सुखावहम्।। ७८

वेदगर्भोऽपि तेनैव गत्वा स्थानं महत्तरम् ।
स्नात्वा सायं ब्रह्मतीर्थे पूरयित्वा च कुण्डिकाम्।। ७९

पञ्चाक्षरेणाभिमन्त्र्य प्रोक्षयामास सन्निधौ ।
पारिजातवनाधीशः पापमुक्तिं ददौ तदा ।। ८०

राक्षसोऽपि विमुक्तश्च स्वकृतादपि चांहसः ।
पश्यतां चैव सर्वेषां विमानमधिरुह्य च ।। ८१

ययौ कैलासभवनं ततो देवेन चोदितः ।
राजाऽपि स्वस्थदेहश्च पूर्वस्मरणसंयुतः ।। ८२

चकार पूजां देवस्य ब्रह्मणा पूजितस्य च ।
वेदगर्भस्य वचसा स्नात्वा कावेरिकाजले ।। ८३

वैशाखे च विशाखायां तिथौ स्वात्मविमुक्तिदे।
पञ्चामृतैः पञ्चगव्यैरभिषिच्य द्विजोत्तमैः ॥ ८४

निवेद्य परमान्नं च ददौ ग्रामस्य सप्तकम्।
कोटिस्वर्णं ददौ पश्चात् पूजार्थं परमेशितुः ॥ ८५

दिव्यवस्त्राणि दिव्यानि रत्नानि सुबहूनि च।
छत्रध्वजपताकाश्च पूजोपकरणानि च ॥ ८६

दत्वा प्रीतमना भूत्वा वेदगर्भमपूजयत्।
तस्यापि कोटिस्वर्णं च अग्निहोत्रार्थमादरात् ॥ ८७

सन्तोष्य ब्राह्मणांश्चैव तदनुज्ञामवाप्य च।
कृत्वा च पुष्पारामं च महापूजोपलब्धये ॥ ८८

तस्मिन् स्थित्वा मासमात्रं जातिस्मरणपूर्वकम्।
शैवं पञ्चाक्षरं लब्ध्वा वेदगर्भान्महामुनेः ॥ ८९

जन्मसाफल्यतामाप्य जीवन्मुक्तोऽभवत्स्वयम्।
तद्वंश्याः पितरः सर्वे तेन मुक्ता भवन्मुने ॥ ९०

इन्द्रसेनस्थ चरितं ये शृण्वन्ति नरा भुवि।
तेषां विप्रापराधश्च तत्क्षणादेव नश्यति ॥ ९१

इन्द्रसेनोऽपि सर्वेषु स्नात्वा तीर्थेषु च स्वयम्।
ययौ स्वनगरीं पश्चात् जन्मसाफल्यमाप्य च ॥ ९२

एतत्ते सर्वमाख्यातं सम्यक् शौनक सुव्रत।
इतः परं च ते वच्मि किं भूयः श्रोतुमिच्छसि ॥ ९३

इति षष्ठोऽध्यायः

—*—

## सप्तमोऽध्यायः

श्री शौनकः—

अस्य क्षेत्रस्य माहात्म्यं श्रुत्वाऽपि पुनरेव मे।
श्रोतुमेव ततः प्रीतिर्यद्यनुग्रहभागहम्॥ १

सूत नो वद सर्वज्ञ माहात्म्यमतिपावनम्।
सूतः—
अस्य क्षेत्रस्य माहात्म्यं कथ्यते ते महामते॥ २

वाञ्छा त्वरयतीवाद्य शृणु सर्वज्ञशेखर।
अत्रैवोदाहरन्तीममितिहासं पुरातनम्॥ ३

शिवप्रीतिकरं पुण्यं सर्वसौभाग्यदायकम्।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यन्ते मनुजा भुवि॥ ४

पुरा राथन्तरे कल्पे वर्तमाने कृते युगे।
नर्मदायास्तटे रम्ये ऋषिरासीद्धि शालिकः॥ ५

आश्रमे निवसन्विप्रैः स्वकीयैरपि बान्धवैः।
मातापित्रोश्च शुश्रूषां कुर्वन्नास्ते द्विजोत्तमः॥ ६

धर्मशीलः पिता तस्य कालधर्ममुपाश्रितः।
तत्पत्नी यज्ञशीला च भर्त्रा चानुमृतिं ययौ॥ ७

शालिकोऽपि स्वपित्रोश्च कृत्वा चैवोर्ध्वदेहिकम्।
अस्थीन्यादाय कुम्भे च परलोकहिताय च॥ ८

गङ्गायामस्थिनिक्षेपः कर्तव्य इति निश्चितः।
स्वशिष्यैरन्वितो भूत्वा गन्तुं समुपचक्रमे॥ ९

तदानीं दैवयोगेन नारदो लोकपूजितः ।
तस्यैव च गृहद्वारमाहारार्थमुपागतः ॥ १०

अस्थिकुम्भसमेतं च प्रयाणोन्मुखमेव च ।
पप्रच्छ किमिदं चेति कुतो गन्ताऽसि मे वद ॥ ११

इत्युक्तस्तेन मुनिना शालिको मुनिसत्तमः ।
नत्वा तत्पादयुगलं दत्वा चासनमेव च ॥ १२

अर्घ्यं दत्वा यथान्यायं आतिथ्येन न्यमन्त्रयत् ।
स्वपित्रोर्मुक्तये सर्वं यथावदनुपूर्वशः ॥ १३

उवाच भक्तियुक्तश्च विनयेन विनीतधीः ।
शालिकः—

भो भो नारद सर्वज्ञ सर्वलोकोपकारक ॥ १४

सर्वे लोकास्त्वया दृष्टा देवदानवराक्षसाः ।
अव्याहतगतिस्त्वं च सर्वज्ञोऽसि यतो भवान् ॥ १५

गङ्गां गन्तुं प्रवृत्तोऽस्मि इदानीमस्थिकुम्भधृत् ।
कैलासलोको गन्तव्यः पितॄणां मम सुव्रत ॥ १६

इत्युक्त्वा तं नमस्कृत्य पादौ तूष्णीमवस्थितः ।
तं दृष्ट्वा शालिकं भक्तं पितृमुक्तिप्रवृत्तिकम् ॥ १७

उवाच विनयज्ञस्य शुश्रूषणरतस्य च ।
नारदः -
शृणु शालिक ते वच्मि त्वत्पित्रोर्मुक्तिकारणम् ॥ १८

सर्वे लोका मया दृष्टाः स्थानानि च विशेषतः ।
भूतं भव्यं भविष्यच्च सर्वं वेद्मि मुनीश्वर ॥ १९

कुत्रजिज्जन्मना मुक्तिः कुत्रचिद्दर्शनाद् द्विज।
एवं बहुविधो देशो नानापुण्यप्रदायकः ।। २०

काश्यां च मरणान्मुक्तिः पापेभ्यो नात्र संशयः।
नरकं च न यात्येव काशीवासी कदाचन ।। २१

यस्य दन्तनखास्थीनि काश्यां वै निक्षिपेदिति।
शतपापानि नश्यन्ति यावदस्थिक्षयावधि ।। २२

अस्थिक्षयात्परं नास्ति तस्य पुण्यस्य सञ्चयः।
पश्चाच्च सत्कुले जन्म भविष्यति नरस्य च ।। २३

शिवभक्तौ मतिस्तस्य जायते तत्र वै ध्रुवम्।
ततः सेतुं समासाद्य तस्मिन्नेव च जन्मनि ।। २४

मृतिं लब्ध्वा च काश्यां च कैलासपदवीं व्रजेत्।
एतदप्यधिकं स्थानं रहस्यं वर्तते भुवि ।। २५

केनापि तच्च न ज्ञातं भस्मन्यस्ताग्निखण्डवत्।
अहमेव च जानामि ब्रह्मा वेत्ति शिवोऽपि च ।। २६

एवमुक्तं च गुरुणा तदुक्तं च मयाऽधुना।
गोपनीयं प्रयत्नेन भवताऽपि कथञ्चन ।। २७

अस्ति कावेरिकातीरे दक्षिणे पुण्यभूतले।
पारिजातवनं नाम ब्रह्मणा परिपूजितम् ।। २८

तस्य क्षेत्रस्य महिमा वर्णितुं नैव शक्यते।
अस्थिनिक्षेपमात्रेण शिवलोके वसेद्ध्रुवम् ।।२९

गृध्रेण चाहृतं पूर्वं अस्थिखण्डं मया पुरा।
पतितं च तदाकाशे देवस्थाने महत्तरे ।। ३०

स तु दृष्टश्च कैलासे मया शङ्करसन्निधौ।
नरकादुत्थितः शीघ्रं विमानेन समाहितः ।। ३१

गाणपत्यं तदा दत्तं शिवेन परमेष्ठिना।
मयाऽनुभूतं पूर्वं च त्वमप्येतत्तथा कुरु ।। ३२

अस्थिपातनमात्रेण पितरौ मुक्तिमेष्यतः ।
अस्य क्षेत्रस्य माहात्म्यं कस्यापि च न विद्यते ।। ३३

समादायास्थिकुम्भौ च तत्क्षेत्रं याहि पावनम्।
ब्रह्मपुष्करिणीतीरे खात्वा च घटमेव च ।। ३४

कुशानास्तीर्य तद्गर्ते घटं निक्षिप्य मन्त्रतः ।
पञ्चाक्षरं समुच्चार्य पुनः प्रच्छादयावटम् ।। ३५

तेन ते पितरावन्ते कैलासं च समेष्यतः ।
अस्मिन्वाक्ये न सन्देहं कुरु शालिक सुव्रत ।। ३६

असत्यं यदि मे वाक्यं मन्मूर्धा शतधा भवेत्।
शिव एवात्र जानाति देवपादे शपाम्यहम् ।। ३७

क्षेत्रोपवासं कृत्वा च शिरोमुण्डनमेव च।
अनुज्ञाप्य द्विजवरान् भोजयस्व च तान्पुनः ।। ३८

तस्मात्सर्वप्रयत्नेन कार्यो विधिरनुत्तमः ।
अस्थीनां दर्शनं तत्र न कर्तव्यं द्विजोत्तम ।। ३९

रहस्यं कारणं चास्ति तस्मिन्नालोकने महत्।
उपरिष्टाच्च कुम्भस्य अश्वत्थं स्थापयस्व ह ।। ४०

एतस्य सदृशं लोके न भूतं न भविष्यति।
इत्युक्त्वा नारदस्तूष्णीं भुक्त्वा तन्मन्दिरे स्थितः ।। ४१

यथागतं गतः पश्चात्तीर्थसेवी द्विजोत्तमः ।
एवं प्रचोदितो विप्रो मुनीनां शालिकोत्तमः ।। ४२

मुक्त्यर्थमेव पित्रोश्च क्षेत्रमैरावतं गतः ।
तथा चकार सर्वं च अस्थिनिक्षेपणं द्विजः ।। ४३

अस्थिनिक्षेपसमये कुम्भरन्ध्रे द्विजोत्तमः ।
ददर्श किञ्चित् कुम्भे च अस्थिपूर्णे स शालिकः ।। ४४

यावन्ति तत्र चास्थीनि तावल्लिङ्गाकृतीनि च ।
दृष्ट्वा च विस्मयं गत्वा तूष्णीं प्रच्छाद्य चावटम् ।। ४५

अश्वत्थं स्थापयामास तस्योपरि मनोहरम् ।
क्षेत्रोपवासं कृत्वा च शिरोमुण्डनपूर्वकम् ।। ४६

तिलोदकं पिण्डदानं कृत्वा ब्राह्मणभोजनम् ।
स्थानं वासाय तत्रैव न्यवसत्प्रीतिपूर्वकम् ।। ४७

अस्थिनिक्षेपणात्पश्चात् विमानं सार्वगामिकम् ।
शिवः संप्रेषयामास तावानेतुं स्वदूतकान् ।। ४८

समागत्य च दूताश्च शिवसारूप्यधारिणः ।
विमाने तौ समारोप्य कैलासमगमन् द्विज ।। ४९

शालिकोऽपि च तौ दृष्ट्वा पितरौ लोकवन्दितौ ।
स्वयं कृतार्थतां प्राप्य शिवज्ञानमवा प्य च ।। ५०

देहान्ते पितृभिः साकं कैलासं प्राप्तवान्पुरा ।
देव्याऽलङ्कारनायक्या सहितो ब्रह्मनायकः ।। ५१

पञ्चाक्षरं व्याकुरुते दक्षिणे श्रवणे विभुः ।
दृष्ट्वाऽपि यत्र कुत्रापि मृतानामपि सर्वदा ।। ५२

ब्रह्मकुण्डसमं तीर्थं ब्रह्मक्षेत्र समं नहि ।
क्षणं क्षणार्धमपि वा ये वसन्ति स्थलोत्तमे ।। ५३

तेषामीश्वरसायुज्यं भवत्येव न संशयः ।
शिवरात्रिदिने पुण्ये यः करोति शिवार्चनम् ।। ५४

शिवसायुज्यमाप्नोति सत्यं सत्यं न संशयः ।
अर्चयित्वा चतुर्यामं जागरित्वा निशामपि ।। ५५

श्रुत्वा पुराणं तत्रैव ब्राह्मणैर्वेदपारगैः ।
बिल्बपत्रैर्विशेषेण पूजा तत्र विशिष्यते ।। ५६

एकेन बिल्वपत्रेण यः करोति शिवार्चनम् ।
शिवनाम समुच्चार्य देवीं चापि तथैव च ।। ५७

स कोटिशिवरात्र्याश्च फलं प्राप्नोति मानवः ।
यदा कदा वा संप्राप्तः स्थानमेतत्पुरातनम् ।। ५८

तदैव मुण्डनं कार्यमुपवासपुरःसरम् ।
पितरस्तृप्तिमायान्ति यावच्चन्द्रदिवाकरौ ।। ५९

वृषोत्सर्गं पितॄणां तु तुष्टयेऽस्मिन् स्थलोत्तमे ।
रोमसंख्यातवर्षाणि शिवलोके महीयते ।। ६०

अमायां प्रतिमासं तु स्नानं श्राद्धं पितृप्रियम् ।
वंशवृद्धिर्भवेत्तस्य पितृप्रीतिश्च तस्य च ।। ६१

अर्धोदये महापुण्ये तथा पुण्ये महोदये ।
सूर्येन्दुग्रहणे काले पारिजातवने शुभे।। ६२

कावेरीस्नायिनां नॄणां दर्शनात्पातकं तदा ।
विनश्यति क्षणेनैव रवेरन्धतमो यथा ।। ६३

कायिकं त्रिविधं पापं वाचिकं तु चतुर्विधम् ।
मानसं त्रिविधं पापं नराणां परिकीर्तितम् ।। ६४

परदाराभिगमनं हिंसा चैव विधानतः ।
परद्रव्यापहरणं त्रिविधं कायिकं स्मृतम् ।। ६५

पैशुन्यमनृतं चैव पारुष्यमपि सर्वशः ।
असंबद्धप्रलापश्च वाचिकं स्याच्चतुर्विधम् ।। ६६

अन्यद्रव्येष्वभिध्यानं मनसा नष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ।। ६७

पापमेतद्दशविधं अर्धोदयमहोदये ।
रविचन्द्रग्रहे चैव पारिजातवनस्थले ।। ६८

कावेरीस्नायिनां नॄणां तत्क्षणेन विनश्यति ।
पारिजातवनस्थाने रवीन्दुग्रहणे सति ।। ६९

कावेरीस्नानकृन्मर्त्यः कोटियज्ञफलं लभेत् ।
पारिजातवनक्षेत्रे कावेरी दुर्लभा नृणाम् ।। ७०

एषु कालेषु पुण्येषु वरसायुज्यदायिनी ।
पारिजातवनक्षेत्रे सर्वस्थानोत्तमोत्तमे ।। ७१

कवेराजायां स्नायीत ग्रहणे चन्द्रसूर्ययोः ।
ग्रहणे मुक्तिदा पुण्या सर्वैश्वर्यप्रदायिनी ।। ७२

गङ्गाशतगुणा ज्ञेया महापातकनाशिनी ।
सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने । ७३

पारिजातवनक्षेत्रे ग्रहणे चन्द्रसूर्ययोः ।
यः करोति सकृत् श्राद्धं गयाश्राद्धफलं लभेत् ।। ७४

चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत्।
तेनैव सकला पृथ्वी दत्ता विप्रकरे ध्रुवम्।। ७५

अत्र स्थाने महापुण्ये ग्रहणे चन्द्रसूर्ययोः।
पितृभूताय विप्राय भूतिरुद्राक्षधारिणे।। ७६

श्रोत्रियाय दरिद्राय भूमिं दद्यात्सदक्षिणाम्।
धान्यं हिरण्यं गां चैव वस्त्रं तण्डुलमेव च।। ७७

आयुरारोग्यसंपन्नो धनधान्यसमृद्धिमान्।
पुत्रपौत्रादिसंयुक्तो बहुक्षीराढ्यगोयुतः।। ७८

नरो भवति देहान्ते शिवसायुज्यमाप्नुयात्।
कृष्णपक्षचतुर्दश्यामिन्दुवारे विशेषतः।। ७९

कृष्णाष्टम्यामर्कवारे ह्ययनद्वितये वरे।
संक्रान्तिपुण्यकाले च पौर्णमास्यां शुभे दिने।। ८०

सोमसूर्योपरागेषु मन्वादिषु युगादिषु।
वैधृतौ च व्यतीपाते श्रवणार्के तथैव च।। ८१

पारिजातवनक्षेत्रे पूर्वोक्तेनैव वर्त्मना।
कुर्वन् समस्तकर्माणि शिवलोके महीयते।। ८२

अत्र सन्देहकृन्मर्त्यो नरकं प्रतिपद्यते।
एतदध्याय पठनात् श्रवणादपि मानवः।
शिवलोकमवाप्नोति सत्यं सत्यं न संशयः।। ८३

इति सप्तमोऽध्यायः

—*—

## अष्टमोऽध्यायः ।

शालिकः—

मुने सर्वार्थतत्त्वज्ञ सर्वभूतोपकारक।
त्वद्वाक्यादेव पितरौ प्राप्तौ कैलासमुत्तमम्।। १

अव्याजेन परेषां च उपकारित्वमेव च।
अस्थिखण्डं च यत्रस्थं कस्य चास्थि तदद्भुतम्।। २

गृध्रेण चाहृतं यत्र तत्सर्वं विस्तराद्वद।
अहो पुण्यतमः सोऽयं जन्मान्तर तपोबलात्।। ३

यस्मिन्क्षेत्रे निपतितं गृध्रेणैव समाहृतम्।
न तस्य सदृशो लोके शिवभक्तोऽस्ति कश्चन।। ४

केन वा पुण्यपाकेन नीतं दैवबलेन च।
अस्ति कुण्डीरविषये ग्रामो ह्युत्पलसंज्ञकः।। ५

बहवो ब्राह्मणास्तत्र वसन्ति द्विजपुङ्गवाः ।
तस्मिन्नेवाग्रहारे च सोमशर्मा द्विजोत्तमः।। ६

निवासमकरोत्पूर्वं कुटुम्बी ग्रामयाचकः ।
दायादैर्हृतभूमिश्च धनधान्यविवर्जितः ।। ७

कुटुम्बभरणं तत्र कथंचित्तत्र चैव हि।
एवं प्रवर्तमानस्य काले भार्या ममार ह।। ८

पुत्राश्चापि च चत्वारस्ततश्च मरणं गताः ।
ब्राह्मणः शोकसन्तप्तो बभ्राम भ्रान्तचेतनः ।। ९

वनाद्वनान्तरं गच्छन् देशाद्देशं च निर्जनम्।
भिक्षाहारपरो नित्यं कदाचित्फलजीवितः ।। १०

एवं सञ्चरमाणश्च द्विजस्य भवनं गतः ।
तस्मिन्काले द्विजस्तत्र शिवपूजाप्रवर्तकः ॥ ११

आस्ते शुद्धसमाचारः पत्रपुष्पफलान्वितः ।
शिवं समर्चयामास स्वगृहे ब्राह्मणोत्तमः ॥ १२

धूपैर्दीपैश्च नैवेद्यैः उपचारैश्च षोडशैः ।
असावपि द्विजस्तत्र मोदमानः शिवार्चकम् ॥ १३

पश्यन्पश्यन् पुनः पश्यन्सन्तोषेण मुहुर्मुहुः ।
अन्नार्थी स्थितवांस्तत्र ब्राह्मणस्य तु मन्दिरे ॥ १४

तस्यैव देवपूजान्ते तेनैव ब्राह्मणेन च ।
प्रदक्षिणं चकारात्र कुक्षिपूरणकारणात् ॥ १५

तेनापि भोजनं दत्तं ब्राह्मणाय च भिक्षवे ।
भुक्त्वा यथेष्टं तत्रान्नं वैदिकस्य विशेषतः ॥ १६

स्थित्वा तत्रैव रात्रौ च प्रभाते च ययौ पुनः ।
ग्रामाद्ग्रामान्तरं गच्छन् मध्ये वर्षेण पीडितः ॥ १७

निषसाद तरोर्मूले तदा चाशनिपातनात् ।
पञ्चत्वमगमत्पश्चात् निर्जने शून्यभूतले ॥ १८

प्राणोत्क्रमणतः पश्चात् कङ्कगोमायुवायसाः ।
मांसाशिनश्च खादन्तो विचकर्षन्परस्परम् ॥ १९

पतितं तत्र तत्रैव खण्डशश्चास्थिसञ्चयम् ।
तेन यद्ब्राह्मणगृहे दृष्टं च शिवपूजनम् ॥ २०

प्रदक्षिणं चापि कृतं तत्फलद्वयमेव च ।
शिवप्रदक्षिणफलं शिवपूजाप्रदर्शनम् ॥ २१

तत्कर्म सफलीकर्तुं गृध्रो भूत्वा च यत्फलम्।
आदाय चास्थिखण्डं च क्षेत्रमेतदुपागतः ।। २२

पातयित्वा चास्थिखण्डं पारिजातस्य मध्यमे।
निलिल्ये तद्वने गृध्रः शिवक्षेत्रे महत्तरे ।। २३

अशनेः पतनं जातं भक्तिहीनप्रदक्षिणात्।
कुक्षिपूरणचित्तेन यत्कृतं तत्र दर्शनम्।। २४

मन्त्रसंस्कारहीनश्च जातश्च ब्राह्मणस्तथा।
येन केन प्रकारेण यस्य कस्यापि देहिनः ।। २५

शिवस्य दर्शनं पुण्यं शिवस्यैव प्रदक्षिणम्।
जायते यदकालेन निष्फलाय न कल्पते।। २६

तस्मादस्यास्थिखण्डस्य गृध्ररूपफलेन च।
शिवक्षेत्रमुपानीतं पुनरावृत्तिवर्जितम्।। २७

सोऽपि तत्र विमुक्तोऽभूत् अस्थिप्रपतनेन च।
अनेकजन्मसिद्धानां अपि वेदान्तवादिनाम्।। २८

श्रौतस्मार्तविशिष्टानां जातानां च कुले शुभे।
यत्फलं जायते पुंसां तत्फलं प्राप्तवान्द्विजः ।। २९

अकृतातिथिपूजानां अनेकाशरपोषिणाम्।
अमहादेवभक्तानां दुर्लभं शिवमन्दिरम्।। ३०

अकन्यादायिनां पुंसां अगोदानरतात्मनाम्।
अमातृपितृभक्तानां दुर्लभं शिवमन्दिरम्।। ३१

अमाघस्नायिनां नृणां आलस्योपहतात्मनाम्।
अनुपासितहोमानां दुर्लभं शिवमन्दिरम्।। ३२

एतादृशं शिवपदं तेन प्राप्तं द्विजन्मना।
किं पुनर्भक्तियुक्तानां शिवमर्चयतां कलौ ।। ३३

बहुनाऽत्र किमुक्तेन द्रष्टव्यो ब्रह्मनायकः ।
अज्ञानिना ज्ञानिना वा भक्तिहीनेन वा द्विज ।। ३४

यदृच्छया च दृष्टश्चेत् देवोऽपि ब्रह्मनायकः ।
मुक्तिं दास्यति भक्तानां संसारमलमुक्तये ।। ३५

विमानेन द्विजः शम्भुलोकं निर्वृतिदायकम्।
अगमत्स्वास्थिखण्डस्य पतनेन पुरोत्तमे ।। ३६

माहात्म्यमेतत्पठतां च शृण्वतां दिने दिने देवसभांगणे च।
तेषां च वासो रजताद्रिशृङ्गे भवेच्च सत्यं कृपया शिवस्य ।। ३७

सदादरेणापि च शृण्वतां कलौ विशेषविज्ञानफलप्रदं भवेत्।
स शम्भुरूपं परिगृह्य पश्चात् वसेच्च नित्यं शिवसन्निधौ च ।। ३८

निमिषं निमिषार्धं वा वासं कुर्वन्ति ये नराः ।
ऐरावतपुरे पुण्ये न तेषां च पुनर्भवः ।। ३९

पितरोऽपि दिवं यान्ति निरयाद्दुःखमोचिताः ।
न पतन्ति च तत्रस्था यान्ति ब्रह्मपदं ततः ।। ४०

तस्मादत्रैव नियतं क्षेत्रस्य च विशेषतः ।
दर्शनं चैव कर्तव्यं मुक्तिकामिभिरादरात् ।। ४१

सीमाप्रवेशमात्रेण पापं नश्यति चाग्रतः ।
देवदर्शनतः पश्चात्सारूप्यं याति मानवः ।। ४२

तीर्थस्नानेन पश्चाच्च सायुज्यं प्राप्नुवन्ति हि।
न ध्यानं न च पूजा च न स्तोत्रं न च दर्शनम् ।। ४३

इच्छन्ति मुनिमुख्याश्च सर्वे वेदान्तवेदिनः ।
धर्मशास्त्रेषु सर्वेषु कथितं लोकरक्षणम् ।। ४४

ब्रह्मकुण्डसमीपे तु यो दद्यादन्नमुत्तमम् ।
अन्नवर्ष सहस्राणि वसेच्च रजताचले ।। ४५

अहो भाग्यमहो भाग्यं यस्मादुक्तं मयाधुना ।
पारिजातवनक्षेत्रे ह्यार्द्रायां चापगे रवौ ।। ४६

कावेर्यां च सकृत्स्नात्वा उषः पश्यति शङ्करम् ।
ऐरावतपुरेशानं अन्ते कैलासमाप्नुयात् ।। ४७

आर्द्रादिने च पश्यन्ति स्नात्वा कावेरिकाजले ।
प्रातर्न ते नराः प्रोक्ताः किन्तु रुद्रा न संशयः ।। ४८

पारिजातवनं यातुं प्रस्थितो यो नरोत्तमः ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् ।। ४९

क्षेत्राणामुत्तमं क्षेत्रं पारिजातवनस्थलम् ।
तीर्थानामुत्तमं प्रोक्तं कावेर्यष्टगुणं भवेत् ।। ५०

तत्र वर्तनमात्रेण पुनर्देहान्तरं विना ।
मुक्तिर्नृणामयत्नेन सिद्ध्येद्ब्राह्मणपुङ्गव ।। ५१

पञ्चाक्षरस्य मन्त्रस्य सिद्धिरस्य क्षणाद्भवेत् ।
पञ्चाक्षरजपस्तत्र एकः कोटिगुणो भवेत् ।। ५२

पारिजातवनक्षेत्रं ब्रह्महत्यादिशोधकम् ।
पारिजातवनस्थाने तुलायां मकरे रवौ ।। ५३

स्नातुमायान्ति कावेर्यां गङ्गाद्याः सरितो द्विज ।
स्वपापानां विनाशार्थं त्यक्तानां पापिभिर्नरैः ।। ५४

अतः स्नानं विशिष्टं स्यादत्र मासद्वये द्विज ।
अतः पापविनाशार्थं पारिजातवनस्थले ।। ५५

प्रयत्नेनापि गन्तव्यं स्नातुं मासद्वयेऽत्र वै ।
पारिजातवनक्षेत्रे कावेरीस्नायिनां नृणाम् ।। ५६

महापातकसङ्घानि नश्यन्ति क्षणमात्रतः ।
ऐरावत पुरक्षेत्र सह्यजाजलपायिनाम् ।। ५७

मातॄणां स्तन्यपानं तु न भूयो जायते द्विज ।
पारिजातावन क्षेत्रे सह्यजास्नायिनां तदा ।। ५८

ब्रह्मघ्नं वा सुरापं वा गुरुतल्पगमेव वा ।
एतत्संसर्गिणं वापि शुद्धं कुर्यात्क्षणेन वै ।। ५९

पारिजातवनस्थानं पञ्चपातकनाशनम् ।
श्रद्धया नाश्रयिष्यन्ति पातकोपहृता जनाः ।। ६०

पारिजातवनक्षेत्रकावेरीं पापनाशिनीम् ।
श्रद्धया नाचरिष्यन्ति पातकोपहृता जनाः ।। ६१

तुलामासे माघमासे पारिजातवनस्थले ।
न स्नास्यन्ति च कावेर्यां पातकोपहृता जनाः ।। ६२

पापानामपि सर्वेषां पारिजातवनस्थले ।
ऐरावतपुरेशानसेवया नाशनं भवेत् ।। ६३

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा संकरोऽपि वा ।
भक्त्या ब्रह्मपुरेशानं दृष्ट्वा न निरयं व्रजेत् ।। ६४

प्रदक्षिणं यः कुरुते शिवलिङ्गं स मानवः ।
मुक्तिस्तस्याप्ययत्नेन सिद्ध्यत्याशु द्विजोत्तम ।। ६५

अङ्गप्रदक्षिणं चैव नमस्कारप्रदक्षिणम्।
सव्यापसव्यं तु तथा सोमसूत्रप्रदक्षिणम्।। ६६

पारिजातवनेशस्य क्रियते यत्प्रदक्षिणम्।
एकेनैव विमुक्तिः स्यात् कष्टसंसारसागरात्।। ६७

प्रदक्षिणेन चैकेन पारिजातवनस्थले।
लक्षकोटिसहस्रस्य प्रदक्षिणविधेः फलम्।। ६८

एकं सव्यमसव्यं तु तथा दशशतं स्मृतम्।
सोमसूत्रं त्रिलक्षं स्यान्नत्वा नत्वा तु कोटिशः।। ६९

अंगप्रदक्षिणं पुण्यमनन्तं तत्प्रकीर्तितम्।
स्तोत्रं विनैव मौनी स्यात् मन्दं च गमनं तथा।। ७०

पारिजातवनेशस्य नमस्कारप्रदक्षिणम्।
अर्चनं वन्दनं शम्भोः जन्मान्तरतपःफलम्।। ७१

ऐरावतपुरेशस्य दर्शनं नातिदुर्लभम्।
अत्यन्तदुर्लभं लोके प्रदक्षिणमनुक्रमात्।। ७२

दुर्लभं प्राप्य मानुष्यं पारिजातवनेश्वरम्।
नार्चयेन्नैव सेवेत न कुर्याच्च प्रदक्षिणम्।। ७३

न स्नाति चैव कावेर्यां स एव नरगर्दभः।
पुनः पुनरहं वक्ष्ये सत्यमेव मृषा च न।। ७४

अनाराध्य महादेवं पारिजातवनेश्वरम्।
संसारसागरे मग्नः कथं पारं गमिष्यति।। ७५

ऐरावतपुरेशानसेवाहीना नरास्तु धिक्।
ऐरावतपुरेशानं न नमेद्यस्य वै शिरः।। ७६

धिक् जन्म तस्य सततं नैव तन्मुक्तिभाग्जनः ।
पारिजातवनेशान भक्तिमन्तः सुराश्च वै ।। ७७

श्रीमत्पुष्पपुरेशानभक्तिहीनस्तु दानवः ।
श्रीमत्पुष्पपुरेशानभक्तिमन्तो जनास्तु ये ।। ७८

ते श्रेष्ठाः सर्वदेवेभ्यो यतो भक्तिः सुदुर्लभा ।
संमार्जनादिभिर्ये वै ब्रह्मेशानस्य चालयम् ।। ७९

सम्यक्तुष्यति देवेशः तेषां तुष्टो भवेच्छिवः ।
पारिजातवनस्थानकावेर्यां स्नान्ति ये नराः ।। ८०

प्रदक्षिणं ये कुर्वन्ति ब्रह्मेशस्य द्विजोत्तम ।
नमस्कारं प्रकुर्वन्ति पारिजातवनेश्वरम् ।। ८१

पञ्चाक्षरं महामन्त्रं ये पठन्ति स्थलेऽत्र वै ।
श्रीरुद्रं ये जपन्त्यत्र भक्तियुक्तेन चेतसा ।। ८२

पयो दधि घृतं तैलं शर्करां गुडमेव च ।
रम्भाफलं च चूतं वा पनसं वान्यदेव वा ।। ८३

पारिजातवनेशाय ये प्रयच्छन्ति भक्तितः ।
चन्दनं गुग्गुलं वाऽपि ये प्रयच्छन्ति चात्र वै ।। ८४

पारिजातवनेशाय दीपानारोपयन्ति वै ।
पारिजातवनेशस्य प्रीतये विप्रभोजनम् ।। ८५

भक्त्या कुर्वन्ति वरदे पारिजातवनस्थले ।
श्रीमत्पुष्पपुरस्थाने तन्माहात्म्यं पठन्ति ये ।। ८६

स्थित्वा देशान्तरे चापि तन्माहात्म्यं पठन्ति ये ।
पाठकानामिदं विप्र ये प्रयच्छन्ति वै धनम् ।। ८७

वस्त्रं क्षेत्रं च धान्यं च काञ्चनं वसु किञ्चन ।
पारिजातवनस्थाने ये च श्राद्धानि कुर्वते ।। ८८

पारिजातवनक्षेत्रे कुर्वते ये महालयम् ।
सह्यजायां तु ये चात्र माघस्नानं प्रकुर्वते ।। ८९

तुलामासे तु कावेर्या येऽत्र स्नानं प्रकुर्वते ।
पौर्णम्यां भानुवारे च व्यतीपातेन्दुवासरे ।। ९०

विषुवायनकालेषु ग्रहणे चन्द्रसूर्ययोः ।
अन्येषु पुण्यकालेषु येऽत्र स्नानं प्रकुर्वते ।। ९१

ते नराः पापनिर्मुक्ताः शिवलोकं प्रयान्ति वै ।
पारिजातवनक्षेत्रं ये गच्छन्ति द्विजोत्तमाः ।। ९२

तान्नमस्कुर्वते नित्यं देवेन्द्रप्रमुखाः सुराः ।
पारिजातवनस्थाने कावेरी मुक्तिदायिनी ।। ९३

स्मृताऽऽर्तिनाशिनी सा च सर्वपापक्षयंकरी ।
अत्र स्नात्वा महादेवं पितृमातृक्रियां तथा ।। ९४

दृष्ट्वा कृत्वा यथाशास्त्रं शिवलोकं प्रयान्ति वै ।
पारिजातवनक्षेत्रे कावेरीमुख्यरन्नरः ।। ९५

व्रजामीति प्रयाति स्म स शिवो मानवो न च ।
पारिजातवने पुण्ये पवित्रे पापनाशने ।। ९६

स्नात्वा मकरसंक्रान्तौ कावेर्यां सत्क्रियोचिता ।
पारिजातवनेशानं नीलकण्ठमुमापतिम् ।।९७

श्रीमद्ब्रह्मपुरेशानं दृष्ट्वा सद्यो विमुच्यते ।
स्थलेऽस्मिंस्तद्दिने तत्र विप्रस्यैकस्य भोजनम् ।। ९८

दत्वा शतसहस्राणि विप्राणां भोजने फलम्।
अणुमात्रं धनं दत्तं महामेरुसमं भवेत्।। ९९

स्थलेऽस्मिंस्तद्दिने विप्र एकां गां प्रददाति चेत्।
कपिलानां सहस्रस्य दानतुल्यफलं लभेत्।। १००

शुभे मकरसंक्रान्तौ पारिजातवनस्थले।
मरुद्वृधायां न स्नाति न पश्यति महेश्वरम्।। १०१

न ददाति च विप्राय स एव ब्रह्महा स्मृतः।
पारिजातवनक्षेत्रे पितॄनुद्दिश्य तर्पणम्।। १०२

क्षेत्र श्राद्धं च कुर्वीत पितॄणां तृप्तये द्विज।
पितरस्तृप्तिमायान्ति नात्र कार्या विचारणा।। १०३

अतिपापसहस्राणि कुर्वन्नपि नराधमः।
पारिजातवनक्षेत्रे शिवरात्रिव्रतं चरन्। १०४

ब्रह्महत्यासहस्राणि व्यपोहति न संशयः।
पारिजातवनक्षेत्रे शिवरात्र्यामुपोषितम्।। १०५

शङ्करं सेवमानं च प्रतियामं विशेषतः।
कुर्वन्तं जागरं तत्र नियमाचार संयुतम्।। १०६

पारिजातवनेशानः प्रापयेत्परमां गतिम्।
पञ्चगव्येन पयसा दध्ना चैव गवां द्विज।। १०७

इक्षुसारेण मधुना नालिकेरजलैरपि।
गन्धवासिततोयैश्च तैलैरपि घृतैस्तथा।। १०८

शिवरात्र्यां शिवं चापि स्नापयेद्भक्तिपूर्वकम्।
तस्य पापानि नश्यन्ति शिवलोकं च गच्छति।। १०९

पारिजातवनस्थाने ब्रह्मेशानस्य मुक्तिदे।
सेवां प्रकुर्वतां पुंसां किञ्चित्पापं न विद्यते ॥ ११०

सत्यं सत्यमिदं सत्यं सत्यं वच्मि विशेषतः ।
मार्गशीर्षस्य मासे तु या तिथिः शुक्लषष्ठिका ॥ १११

तस्मिन्दिने समायान्ति देवाश्चेन्द्रपुरोगमाः ।
देवलोकप्रसूनैश्च पूजां कर्तुं शिवस्य च ॥ ११२

पूजाकालो देवतानां सायुज्यफलदो भवेत्।
सर्वसंपदमाप्नोति षष्ठ्यां दर्शनमात्रतः ॥ ११३

शिवलोकमवाप्नोति नात्र सन्देहकारणम्।
इष्टार्थसिद्धिर्भवति शिवक्षेत्रफलं हि तत् ॥ ११४

इति अष्टमोऽध्यायः

—*—

## नवमोऽध्यायः

तीर्थानां सरसां वक्ष्ये क्रमेण फलदायकम्।
महापापप्रशमनं महासौभाग्यदायकम् ॥ १

प्रथमं ब्रह्मतीर्थे च ब्रह्मणा परिकल्पिते।
ब्रह्मजज्ञानमन्त्रेण प्रथमं स्नानमाचरेत् ॥ २

तत्तीर्थपश्चिमतटे ब्राह्मणैर्वेदवित्तमैः ।
दातव्यं परमान्नं च कांस्यपात्रप्रपूरितम् ॥ ३

फलशर्करयोपेतं तांबूलेन च संयुतम्।
तेन दानेन महता महापापैर्विमोचितः ॥ ४

स्ववंश्यैः पितृभिः सार्धं कैलासे निवसेद्ध्रुवम्।
सुधाकूपे महापुण्ये देवेन्द्रेण समाहृते ॥ ५

स्नातस्य कार्तिके मासे भौमवारेषु सर्वदा।
भूतप्रेतपिशाचैश्च महापापैः प्रमुच्यते ॥ ६

आपो वा इति मन्त्रेण स्वर्णदानं समाचरेत्।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥ ७

पितरो यान्ति वै तस्य शिवलोकं न संशयः।
कावेर्यां तु महातीर्थे महापापनिवारके ॥ ८

सोमसूर्योपरागे च अर्धोदयमहोदये।
निमज्ज्य च जले तत्र शिवद्रोहाद्विमुच्यते ॥ ९

चालनात् शिवलिङ्गस्य यो द्रोह उपपद्यते।
स दोषो नश्यति क्षिप्रं जन्मान्तरशतार्जितम् ॥ १०

वस्त्रदानश्चान्नदानं भूमिदानमथापि वा।
तेन पुण्येन भगवान् ब्रह्मेशः स गणैः सह ॥ ११

गाणापत्यं ददात्येव सत्यं सत्यं वदाम्यहम्।
स्नातव्यं सोमवारेषु सर्वमासेषु सर्वदा ॥ १२

विशेषात्कार्तिके मासि दातव्यं कदलीफलम्।
एवं कृतवतस्तस्य स्वभोगाय मुनीश्वर ॥ १३

इन्द्रादयश्च सेवन्ते रम्भाद्यप्सरसान्विताः।
भृत्यकृत्यं च कुर्वन्ति यावदाचन्द्रतारकम् ॥ १४

एवं क्रमेण माघान्ते तीर्थेषु स्नानमात्रतः।
सर्वलोकनिवासश्च भविष्यति सुनिश्चितम् ॥ १५

पारिजातवनक्षेत्रे स्नात्वा कावेरिकाजले।
अरत्निमात्रभूदानं कृतं चेत्पापनाशनम्॥ १६

न भूयो जनिमाप्नोति शिवेन सह मोदते।
अत्र गोदानतो मर्त्यः कैलासे भोगमाप्नुयात्॥ १७

धनदानेन मुक्तिश्च भविष्यति न संशयः।
अत्रा ब्रह्मविदे दत्वा भोजनं श्रद्धयान्वितः॥ १८

सर्वपापविनिर्मुक्तः संसारमतिवर्तते।
यो वै कृष्णचतुर्दश्यां पारिजातवनस्थले॥ १९

भोजयेद्ब्राह्मणं शिष्टं महादेवः स उच्यते।
पारिजातवनक्षेत्रवैभवं पुण्यवर्धनम्॥ २०

दुःस्वप्ननाशनं पुण्यं शृण्वतां पठतामपि।
अत्र प्रामाण्यकृन्मर्त्यः शिवलोकं समश्नुते॥ २१

अत्राप्रामाण्यवादी तु नरकानयते ध्रुवम्।
अध्यायश्रवणादस्य वाजिमेधफलं लभेत्॥ २२

दशानां राजसूयानां अध्यायश्रवणान्मुने।
यत्पुण्यं सर्वतीर्थेषु गङ्गादिषु निमज्जनात्॥ २३

सर्वव्रतेषु यत्पुण्यं सर्वदानेषु यत्फलम्।
तत्पुण्यं कोटिगुणितं प्राप्नोति श्रवणादिह॥ २४

पारिजातवनक्षेत्रमाहात्म्यं शृणुयात्पठेत्।
विधूयाखिलपापानि शिवलोके महीयते॥ २५

शिवप्रसादसिद्ध्यर्थं वक्तारं पूजयेन्नरः।
वस्त्रैराभरणैर्दिव्यैः धनैर्धान्यैश्च शौनक॥ २६

ऐरावतेश्वरः प्रीतो भवेत्तत्पूजया ध्रुवम् ।
सर्वपापविनिर्मुक्तः शिवेन सह मोदते ।। २७

तस्मात्पुराणवक्तारं सर्वस्वेनापि पूजयेत् ।
ऐरावतेशमाहात्म्यं श्रवणात्सर्वसिद्दिदम् ।। २८

ऐरावतेशमाहात्म्यं ये शृण्वन्ति पठन्ति च ।
तेषां पापाः प्रणश्यन्ति वह्निना तूलराशिवत् ।। २९

आयुरारोग्यसौभाग्यपुत्रमित्रादिसंयुताः ।
भुक्त्वा नानाविधान्भोगान् विभान्ति विबुधा इव ।। ३०

स देवैरपि तुष्टश्च सर्वत्र विजयी भवेत् ।
सर्वत्र सुखमाप्नोति श्रोता माहात्म्यमैश्वरम् ।। ३१

अनुभूयाखिलं सौख्यं इह लोके परत्र च ।
अन्ते सायुज्यसंज्ञां च परां मुक्तिमवाप्नुयात् ।। ३२

सत्यं सत्यं भवन्मुक्त्यै सत्यमेतन्मयेरितम् ।
तदा संप्रार्थ्य सर्वज्ञः शौनकाय महात्मने ।। ३३

उक्त्वा माहात्म्यमखिलं सूतः पौराणिकोत्तमः ।
सर्वशास्त्रार्थतत्त्वज्ञः शिवज्ञानरतोऽभवत् ।। ३४

इति श्रीमद्ब्रह्माण्डपुराणे ब्रह्मोत्तरखण्डे उपरिभागे
श्रीमदैरावतेश्वरमाहात्म्ये नवमोऽध्यायः

*श्री अलङ्कारवल्ली समेताय ऐरावतेश्वराय नमः*

